सप्तवर्षाण्यगच्छन्मे सुखान्विरहेऽप्रिये ॥
अद्य तन्मीलनं साधु मया सह कृतं त्वया ॥ २३ ॥
दोषा व्याकरणदृष्ट्या रसशब्दार्थहानयः ॥
अत्र ये पुष्कलीभूताः कथ्यंतां ते सविस्तरम् ॥ २४ ॥
अंकुशाग्रमतिवामनरायं यः प्रणम्य तनुते मृदुहृद्भ्यः ॥
वंदनान्यखिलमित्रजनेभ्यो हर्षसंकुलमना इव सोऽहम् ॥ २५ ॥
अज्ञेन शंकरेणेदं बंधवे गुणसिंधवे ॥
लिखितं कृपया यस्य तस्मै भगवते नमः ॥ २६ ॥
शुभं भवतु ।

---

[1] चतुर्थपुष्पम् रविवासरे चैत्रशुद्धतृतीयायाम् १८३३
श्रीशिवः शरणम् ( शेळोली ता. २२ एप्रिल १९११)

स्वस्ति ।

नत्वा गौरीशमात्मस्थं तथा गुरुपदांबुजम् ॥
शेळोलीग्रामवासेन कुशलं लिख्यते मया ॥ १ ॥
प्राप्तं भवत्पत्रमतीव हृद्यं मुदेऽभवन्नश्च तथेंदिरायाः ॥
क्षम्यं हि मेऽलेखनमद्यतावत् क्षमा सतां दीप्तिरिति ब्रुवंति ॥२॥
निर्गदाश्च कुशला वयमत्र श्रीपतेश्चरणलाभकृतार्थाः ॥
इंदिराऽपि ससुता भवत्प्रिया मंगलं वितनुते पतिव्रता ॥ ३ ॥
भवतः सहवाससौख्यभाजां रुचिराहारविहारभाषणानाम् ॥
स्मृतिमात्रसुखानुभूतिगामी दिवसानामधुना नयाम्यहानि ॥ ४ ॥
प्रशान्तबालारुणरश्मिदीप्तां नानालतावृक्षविचित्रपर्णाम् ॥
प्रातर्गृहद्वारि सुखेन तिष्ठन्पश्याम्यहं [2]भूधरदुर्गशोभाम् ॥ ५ ॥

---

१ या पत्रांपैकीं १, २, ३ व ६ हीं पत्रें कवीचे सख्खे बंधु दत्तक श्री. शं. आ. हुजूरबाजार यांना लिहिलीं आहेत. चौथें पत्र कविभगिनी कै. सौ. कमला किंवा इंदिरा हिचे पति वे. शा. सं. विद्याधरशास्त्री कशाळकर यांस लिहिलें आहे. पांचवें पत्र मुलत-बंधु श्री. दत्तात्रय पांडुरंग श्रीखंडे यांस असून सातवें मला उद्देशून आहे. मधुनमधून स्वकीयाप्तांचीं वगैरे नांवें प्रसंगानुरूप कवीनें उल्लेखलीं आहेत.

२ भुधरगड किल्ला. —रा. चिं. श्री.

पुनाति देहं मम वेदगंगा दहत्यनंगारिरघं समूलम् ॥
हरंति वेदान्तगिरस्त्रितापं तनोति भद्रं भवतोऽनुकंपा ॥ ६ ॥
अस्पष्टदन्तमुकुलैर्मृदुदंतहासैर्लीलाशतैः सुवचनैर्नवकल्पनाभिः ॥
हृद्रंजनं च कुरुते नयनाभिरामं बाल्योचितं विहरणं प्रियबालिका ते ॥७॥
श्रीमती कमला तत्र भवद्भक्तिपरायणा ॥
ससुताल्पेन कालेन नंदचित्ताऽगमिष्यति ॥ ८ ॥
आगामिवत्सरो भूयादिष्टकामफलप्रदः ॥
वर्षेऽस्मिन्भवता कार्यः पुत्रजन्मोत्सवो महान् ॥ ९ ॥
यथार्थनाम्ने कुलभूषणाय नमोऽस्तु विद्याधरशास्त्रिणे मे ॥
तथैव तं नर्मपटुं प्रणामः स्मितानन शंकररायमस्तु ॥ १० ॥
कुशलवर्तमानयुक्तं विशेषसमाचारसहितं पत्रोत्तरं प्रार्थ्यते ।
श्रीखंडेकुलोत्पन्नश्चिंतामणिसूनुः शंकरोऽहम्

पंचमपुष्पम् श्रावण शुद्ध २।१८३३ शके
श्रीसद्गुरुमायप्रसन्न. बेळगांव ता. २७।७।१९११

आयुष्मते स्वस्ति निरामयाय शांताय ते सद्गुणभूषणाय ॥
कर्तव्यनिष्ठः परकार्यदक्षोऽधीतोऽसि किं साधुजनानुरक्तः ॥ १ ॥
न श्रूयते किंचन वर्तमानं युष्माकमेतद्वद किं न चित्रम् ॥
निवेदय क्षेममनामयं च चिंतां च दूरीकुरु मामकीनाम् ॥ २ ॥
गानप्रियस्तालविशालदेहो गंभीरवाग्वादविवादशूरः ॥
धूर्तो दुराराध्य उमेशभक्तो दत्तात्रय त्वत्सदृशोस्ति कोऽन्यः ॥ ३ ॥
त्वत्कनीय इषुधीः समधर्मा किं करोति वद माधवरायः ॥
छात्रवृत्तिमवलम्ब्य सुविद्यावैभवाकलनमातनुते किम् ॥ ४ ॥
यद्यस्ति बुद्धिबलकेलिरतिः स्वचित्ते तत्पाटवोत्थितमदो यदि वा विरूढः ॥
हृद्रंजनं किमुत गर्वनिवारणं वा स्वांतोचितं तव करिष्यति बाळुरायः ॥५॥
इहास्मि कर्तव्यपरंपराकुलो विश्रान्तिमिच्छन्नपि शांतमानसः ॥
स्मरन्सदा शंभुपदांबुजं वरं येनैति पारं भवसागरस्य ना ॥ ६ ॥
साष्टांगपातं प्रणमामि भूयः पितृव्यमण्णां च तथात्तिबाईम् ॥
बापुं मम भ्रातरमद्वितीयम् सदाशिवं सार्थगुणं प्रशांतम् ॥ ७ ॥

षष्ठपुष्पम्  भाद्रपदवद्य ८ शके १८३३
श्रीः  बेळगांव १६।९।१९११

स्वस्त्यस्तु ते सद्गुणधामबंधो पत्रे तवानेकगुणे मुदे मे ॥
साहित्यसंगीतकलापतिस्त्वं बालोऽपि जेतासि विचक्षणानाम् ॥ १ ॥
ज्ञानप्रदे शब्दरसार्थदीप्रे विद्वन्मनोहारिणि धीविलासे ॥
साहित्यशास्त्रे गहनेऽपि रम्ये युक्तं हि यत्तेऽभिरुचिः प्रपन्ना ॥ २ ॥
शृंगारसंकीर्णविचारमालाश्चरंति चित्ते तरुणस्य भूयः ॥
शृंगारमुत्सृज्य सुभाषितानां गृह्णासि सारं यदिदं तु चित्रम् ॥ ३ ॥

वस्तूनि दुर्गुणयुतान्यपि भां प्रकामं
तन्वन्ति नाम चतुरो यदि योजकः स्यात् ॥
वक्रोऽसितः स निरसः किल केशपाशो
येनैव बंधुरतरो रमणीजनोऽयम् ॥ ४ ॥

चित्तं हरंति रभसेन मनोविकारा रोगा ब्रुवंति हि तनोः क्षणभंगुरत्वम् ॥
लक्ष्मीश्चलेत्यनलचौरगणा वदंति लोकोऽयमावहति कस्य च नाभिमानम् ॥५
व्याधयो निरगदा भयंकरास्तापयंति जनमानसं भृशम् ॥
शंभुपादकमलं भवापहं शर्मदं सपदि किं न सेव्यते ॥ ६ ॥
गर्भस्थिता ददति कष्टमलं जनन्यै दुःखं प्रसूतिजमसह्यमचिंत्यमेव ॥
कुष्टागुणामयानिराकृतिचिंतनेन कस्मै भवंति सुखदास्तनया न जाने ॥ ७ ॥
अहं क्षेमभुक् शंभुपादाब्जभृंगः सभार्यः सकन्यस्सखीनां समाजे ॥
निजानंदपूर्णः समाधानचित्तः सदेच्छामि ते मंगलं बंधुराज ॥८॥
वामनं सुमनसं नमाम्यहं मित्रवर्गमपि वैद्यकालये ॥
विश्वपालकपदाब्जषट्पदश्चिंतयामि सततं शुभं तव ॥९॥

दोषा व्याकरणदृष्ट्या रसशब्दार्थहानयः
मा भवंत्वित्युमेशस्य चरणे प्रार्थनास्ति मे ॥१०॥

स्वाध्यायाभ्यसनं विवेकवसनं विद्वद्गृहे चासनं
कर्तव्योत्सुकता स्वधर्मपरता गंभीरता धीरता ॥
शांतिः सत्यरतिस्त्वकुंठितमतिर्भक्तिः परे चिद्घने
सैषा सद्गुणमालिका लुठतु ते कंठे सदा सोदर ॥११॥

शुभं भवतु  —शंकरः



सप्तमपुष्पम् Alexandria 23rd Aug. 1919

श्रीः अलीकजंदरीयायाः

Dear Rambhau,

स्वस्ति ते सुमतये प्रियबंधो हर्षदं भवति मे तव पत्रम् ॥
संस्कृतांग्लवचनै रचितं यत् पद्यगद्यखचितं बहुरम्यम् ॥ १ ॥
शक्यं किं रसमंदिरं रचयितुं काव्यं त्वयैतादृशम्
बालेनेति महानयं मनसि मे जातो दृढः संशयः ॥
किं विद्याधरशास्त्रिणा सुमधुरं बालाननाद्भाषितम्
किं पुत्रः पुरुषायते विरचयन् शार्दूलविक्रीडितम् ॥ २ ॥
संदेह एष खलु रोहति दुर्निवारो गच्छेदयं न तु विना तव दर्शनेन ॥
संप्रार्थयामि परमेशपदारविंदं क्षेमप्रदं मम मनोरथपूरणाय ॥ ३ ॥
काव्यं व्यथाजाड्यमलापहारि हृद्यं मनश्चेतननंदकारि ॥
वाग्भूषणं कीर्तिकरं दुरापं तस्माद्धि ते साधुरयं प्रयत्नः ॥ ४ ॥
नगरीयमलीकजंदरीया यतते मत्प्रियकर्त्र्यनेकरूपा ॥
परदेशगतस्य दुर्बलस्य प्रसहिष्णोर्मम चित्तरंजनाय ॥ ५ ॥
प्रवर्तते कीदृशमत्र युद्धं व्यंगीकृताः के च तथा हताः के ॥
जानासि नेदं खलु योग्यमेतद्युद्धस्य वार्ता श्रुतिमात्ररम्या ॥ ६ ॥
अस्त्रैर्बाणैर्घातकैर्धूममेघैर्नानाशस्त्रैः स्फोटकैर्द्रव्यपिंडैः ॥
शंपाघातैर्घोरघोषे रणेऽस्मिन्शक्तोऽस्माकं रक्षणे देव एकः ॥ ७ ॥
दूरे देशेऽपरिचितजने रौद्रसंग्रामकाले
पत्नीमित्रस्वजनरहितेऽज्ञातभाषाविशेषे ॥
नित्यावर्षे जलधिवलये सैकते तप्तभूमौ
भीष्मग्रीष्मे स हि विधुधरः शंकरो रक्षिता मे ॥ ८ ॥
न वर्तते कोऽपि करालतापः संग्रामजन्यो विषमः समो वा ॥
एको हि सूर्यस्य खरः प्रचंडो दिने दिने वृद्धिमुपैति तापः ॥९॥
भूमध्यसिंधावधुना प्रयत्नं मत्स्यास्त्रभीतस्तरणे न कुर्वे ॥
कीलालधिस्नानसमाप्तपुण्यैः क्रीणामि नौकां यदि गंतुकामः ॥१०॥

शुभं भवतु

# ३ शंकरसद्म

[ सन १९१९ सालीं आह्मी मुंबईस (डोंगरीजेल डॉक्टर्स क्वार्टर्समध्यें) रहात असतांना, आमच्या गृहाचें वर्णन 'जानीहि तन्मंडनमिश्रसद्म' या प्रसिद्ध श्लोकाच्या धर्तीवरच 'जानीहि तच्छंकरसद्म चारु' ही समस्या घेऊन शक्य तर आपणही करावें असा आमचा बेत झाला. तदनुसार रचलेले कै. ती. दादांचे श्लोक येथें दिले आहेत, माझे श्लोक खालीं टीपेंत दिले आहेत. टीपेंतील वर्णन परमेश्वरसद्मासहि बरोबरच लागू व्हावें अशा उद्देशानें रचिलें आहे. —रा. चिं. श्री. ]

शांतं प्रशस्तं हिमवातलं यत् स्वच्छं समृद्धं विपुलप्रकाशम् ॥
योग्यस्थलस्थापितवस्तुजातं जानीहि तच्छंकरसद्म चारु ॥१॥
वत्साः सुखं गां विचरंति यत्र स्वाध्यायमग्ना युवकाः सुशीलाः ॥
रामाः सदा पूरितनाथकामा जानीहि तच्छंकरसद्म चारु ॥२॥
साहित्यगीतव्यवहारशास्त्रव्यापारवेदान्तविनोदभाषा ॥
रे! श्रूयते कुत्रचिदप्यमोघा जानीहि तच्छंकरसद्म चारु ॥३॥
वृक्षा जना भृंगविलोलनेत्रा नम्राः फलैर्भक्तिरसैस्स्तनैश्च ॥
यस्यासमन्तात्पुरतोऽन्ततो वा जानीहि तच्छंकरसद्म चारु ॥४॥

---

(रामचंद्र चिंतामण श्रीखंडेकृत 'शंकरसद्म')

लक्ष्मीनिवासं स्पृहणीयशोभं शांतिप्रधानं गजवक्त्रचित्रम् ॥
विद्याधरैर्गीतगुणालयं यज्जानीहि तच्छंकरसद्म चारु ॥१॥
आयान्ति ते यद्विमलान्तरङ्गा गाङ्गास्तरंगा इव साधुसङ्घाः ॥
वेदान्ततश्चित्तविनोदनार्थं जानीहि तच्छंकरसद्म चारु ॥२॥
किं मत्समं सौख्यकरं त्रिलोक्यामित्येष दर्पोऽपि रमालयस्य ॥
उत्सारितो येन गुणैः स्वकीयैर्जानीहि तच्छंकरसद्म चारु ॥३॥
सद्गेह! हे नंदनवंदितश्रि! त्वं संततं मे शरणं भवेति ॥
यस्मै नमस्यन्त्यखिलाश्च लोका जानीहि तच्छंकरसद्म चारु ॥४॥
धर्मार्थकामान्मृगयन्ति लोका आगत्य यस्माद्विमुखा न यान्ति ॥
कामप्रदाने हसितेन्द्रवृक्षं जानीहि तच्छंकरसद्म चारु ॥५॥
आम्राः समन्तात्फलभारनम्राः कम्राननान्तस्स्तनभारनम्रा ॥
भक्ताः पुरो यस्य च भावनम्रा जानीहि तच्छंकरसद्म चारु ॥६॥
कृष्णांग–गंगापद–वेणु–मुक्ताहारैर्मनोहारिजनार्दनोऽपि ॥
रामश्च यस्मिन्कमलाक्ष आस्ते जानीहि तच्छंकरसद्म चारु ॥७॥

## ४ स्फुटश्लोकाः ।

वैपंचिको भवितुमिच्छसि किं कुमार !
स्वीयाप्तसज्जनमनःप्रतिरञ्जनार्थम् ॥
एह्येहि मित्र! कतमोऽपि विशालभालः
स्वर्गानवादनपटुर्वसति प्रसन्नः [1] ॥ १ ॥

✦ ✦ ✦

यद्यत्पश्यसि सुन्दरं ह्युपवने झंझासमीरेरितम्
नानापुष्पसुगंधसंकरयुतं हृद्यं फलैर्व्याकुलम् ॥
तत्तन्मित्र! कनीयसो गुणनिधे रामस्य सामर्थ्यभुक्
श्रीखंडेजनिशंकरोऽयमकरोच्चिंतामणेर्नंदनः [2] ॥ २ ॥

✦ ✦ ✦

कोऽपीन्द्रवज्रां कविराट् चिकीर्षु-
र्वंशस्थमालिन्युपजातिपादान् ॥
एकत्र कृत्वा वितनोति लज्जां
वैद्येषु योषित्स्वपि चित्रकृत्सु [3] ॥ ३ ॥

✦ ✦ ✦

इह निर्धनतैव मानवानां नियमस्तद्विपरीतताऽपवादः ॥
यदि कोऽपि बिभर्ति हेमसूत्रं क्षणमात्रं स हि भाग्यवाञ्छरीरी ॥४॥

✦ ✦ ✦

कृपाप्रसादभोक्तारौ भवानीकमलेशयोः ॥
प्रभार्काविव शोभेतां भुवनेऽस्मिन्वधूवरौ ॥ ५ ॥

✦ ✦ ✦

मंगलं तनुतां शश्वद्विश्वप्रथमदंपती ॥
भक्तकल्याणकुशलौ भवानीकमलेश्वरौ ॥ ६ ॥
श्रीसद्गुरुः प्रसन्नोऽस्तु भक्तकामसुरद्रुमः ॥
ब्रह्मैकपदवीदाता परत्रेह विभूतये ॥ ७ ॥



---

१ सतारवादनांत निष्णात असलेल्या एका कुमारास उद्देशून हा श्लोक आहे.

२ बंगल्याशेजारीं स्वतः बनविलेल्या उपवनासंबंधीं वर्णन.

३ विविध वृत्तांचे चरण चुकून एकाच श्लोकांत घालणारा कवि हा औषधांचें मिश्रण करणारे वैद्य, खाद्य पदार्थांचें मिश्रण करणाऱ्या स्त्रिया व नानारंगांचें मिश्रण करणारे चित्रकार या तिघांनाही जणूं लाजवीत असतो !

## डॉ. रामचंद्र चिंतामण श्रीखंडे एम्. बी. बी. एस्.

### यांच्या कांहीं कविता.

—०—

### ॥ बदरिकाफलमुष्टिः ॥

#### १ प्रियशिशोर्वाक्यं—

(पुढील पत्र ती. कै. डॉ. शं. चिं. श्रीखंडे यांस ते ॲलेक्झांड्रिया येथें असतां लिहिलें आहे.)

प्रीतो मेऽस्तु सदाशिवः कोल्हापूर (जुलै १९१५)

श्लोकैर्युतस्य पत्रस्य लेखने स्फूर्तिदायकम् ॥
अस्माकमुपकर्तारं वंदेऽहं शंकरं प्रभुम् ॥ १ ॥

बंधो त्वदीयानि सुपत्रकाणि लब्धानि काले बहुमोददानि ॥
कान्याङ्ग्लभाषालिखितानि सन्ति सुसंस्कृतश्लोकयुतानि कानि ॥२॥

शालां गच्छन्प्रतिदिनमहं पत्रवाहं वदामि
देयं मह्यं यदि किमपि रे पत्रमस्त्यागतं मे ॥
लब्धं मोदं मनसि जनयत्पत्रमेकं त्वदीय-
माशीरूपं मम बहुमतं दत्तमद्वाह्यनाम ॥ ३ ॥

अत्र वर्षति भृशं पयोधरो वर्तते च परिवाहिणी नदी ॥
गच्छति द्रुतरयेण वल्लभं शोभते समदशासखीगणा ॥ ४ ॥

एतन्मोदं त्वयि जनयतु भ्रातरि प्रेमपूर्णे
पत्रं श्लोकैर्युतमभिनवं द्रष्टुमिच्छामि तेऽपि ॥
पूर्णं चैतद्विपुलकृपया यस्य देवस्य जातं
वृद्धिं सोऽयं नयतु सकलामावयोः प्रीतिमीशः ॥ ५ ॥

आनंदाय भवेत्तवेति तदिदं पत्रं मया लिख्यते
दुर्बोधं यदि वर्तते प्रियशिशोर्वाक्यं तथापि प्रियम् ॥
अज्ञानात्स्खलितानि सन्ति सकलेऽप्यास्मिंल्लघौ पत्रके
क्षन्तव्यं यदशुद्धमस्ति भवता तच्छोधनीयं च ते ॥ ६ ॥

जानाति मां तव सुहृद्यदि तीक्ष्णबुद्धि-
र्गीतामृतं सततमस्ति पिबन्सुखे यः ॥

युङ्क्ते तनूं मलयजेन समः परार्थे
तस्मै भटाय भिषजे प्रणतिर्निवेद्या ॥ ७ ॥
गृह्यतां प्रीतिपूर्वोऽयं नमस्कारस्त्वयापि मे ॥
आशीर्वादं च याचे त्वां नित्यं कुशलकारिणम् ॥ ८ ॥

---

## २ बन्धो ! मदीयां प्रणतिं गृहाण ।

[ ज्येष्ठ बंधु अलेक्झांड्रिआ येथें असतां त्यांस मी लिहिलेले पृथक् पृथक् वेळचे कांहीं श्लोक पुढें संकलित केले आहेत. ]

नित्यं भवन्तं मनसा नमामि भवत्प्रसादं सततं स्मरामि ॥
मह्यं सदाशीर्वचनं प्रदेयं कल्पेत यन्मे सुखवर्धनाय ॥ १ ॥
दर्शय मां बंधुं भोः शंकर गौरीश भालबालेन्दो ॥
एवं पिनाकपाणिं वरदमहं प्रार्थये सततम् ॥ २ ॥
स्वप्ने मह्यं दर्शयित्वात्मरूपं चेतोदीपं दीपयित्वा क्षणं मे ॥
अन्तर्धानं यासि ते संगमाशा जाता चित्ते सिद्धिमीशो ददातु ॥ ३ ॥
नमाम्यहं त्वां मनसि प्रकामं कामं मदीयं कुरुषे हि पूर्णम् ॥
तूर्णं पतिष्यामि पदारविन्दे विन्देय तस्मादहमाशिषं ते ॥ ४ ॥
द्रक्ष्याम्यहं ते पदपद्मयुग्ममित्याशया मे गतमेकवर्षम् ॥
कुरुष्व तस्मात्तव दर्शनेन नेत्रोत्सवं मे लघु बन्धुवर्य ॥ ५ ॥
अये दादा दादा ! मम हृदयसारं सुरुचिरं
सुबंधो बंधोऽसि प्रियतम मदीयस्य मनसः ॥
कदाहं दाहं रे ! तव गमनहेतुं गमयिता–
स्म्यहं ते हन्तेशस्मरणकरणे शंकर रतः ॥ ६ ॥
दत्तां सबद्धाञ्जलिना मयैतां प्रेम्णा सहर्षं सुविचारिणे ते ॥
वाक्चित्तभक्त्या विनयेन युक्तां बन्धो मदीयां प्रणतिं गृहाण ॥ ७ ॥
हृदि तव गुणरूपं दर्शने चातिरम्यं
स्थितमतिसुखदायि त्वं तथा चासि बंधो ॥
मम हृदयपयोधेः पूर्णिमाचारुचंद्र
तव पदकमले मे संततं शीर्षमस्तु ॥ ८ ॥

---

## ३ प्रायः सतामनुकृतिप्रसवाः क्रिया हि ।

[पुढील पत्र गारगोटी येथील वे. शा. सं. सखारामशास्त्री भागवत यांस लिहिलें होतें.]

श्रीशंकरः प्रसन्नोऽस्तु ।　करवीरतः ( १९-६-१९१७ )

स्वस्त्यस्तु विद्याश्रुतिभूषणाय पुण्यप्रभानाशितदूषणाय ॥
केदारभक्ताय निषक्तकाव्यप्रबन्धचित्ताय सदाश्रयाय ॥ १ ॥
श्लोकात्मकप्रेष्ठपवित्रपत्रविसर्जनस्थापितमत्प्रतिष्ठ ॥
सच्छास्त्रिणे वेदविशारदाय कुशाग्रबुद्धे भवते बुधाय ॥ २ ॥

❖　❖　❖

अद्य मत्सकलगात्रहर्षदं सद्य ईप्सितसुखप्रदं मधु ॥
लब्धवान्भवत आशिषा युतं स्तब्धमोहनिकरोऽस्मि पत्रकम् ॥ ३ ॥
चित्रं श्लेषैर्विविधरचनामाधुरीपूर्णपात्रं
　नानाछंदोग्रथितमिहिरभ्राजिशब्दाख्यरत्नम् ॥
लब्ध्वा पत्रं सुरभिरसनं मन्मनोवाग्विनोदं
　रामं दासं भवत इव मामागतं च प्रमोदे ॥ ४ ॥
यथा यथा वाचनमग्नचेता भूयोऽपि तस्यैव पिबामि सारम्
तथा तथा वृद्धरसाभिलाषः कथं न जानामि त तृप्तिमेमि ॥ ५ ॥
अथवात्र न चित्रमस्ति किंचिद्यदि तस्मिन्नमते मनो नितान्तम् ॥
सकलश्रुतिशास्त्रसागरस्य मथनेनोद्धृतचंद्रबिम्बमेतत् ॥ ६ ॥
यथा कुवलये पुनः पुनरपि प्रभूताकरा-
　न्निरीक्षणपरा नराः सकनकाँल्लभन्ते सदा ॥
तथैव भवतो मनोज्ञकविताप्रभुत्वद्युतौ
　रसान्नवनवानहं परिचरँल्लभे पत्रके ॥ ७ ॥
महानुभावाद्भवतो यथाहं प्रत्युत्तरं श्लोकमयं विलोके ॥
मन्ये तथात्मानमहं कृतार्थं सप्रेमतातेक्षितसूनुरेव ॥ ८ ॥
अस्यैव संस्कृतविभूषणपत्रकस्य रम्यैरकारि मनसि स्फुरणं गुणैर्मे ॥
यत्तादृशं विलिखितुं मधुरं सुपत्रं प्रायः सतामनुकृतिप्रसवाः क्रिया हि ॥९॥
पुण्यश्लोक भवन्मनोहरगुणश्लोकेषु दोषोऽस्ति चे-
　द्व्यंगं किं च विदृश्यते खलु मया तत्तत्परीक्षेऽधुना ॥
इत्याबद्धमतिः पुनःपुनरपि व्यालोकयं तानहं
　विद्वन् भानुमयूखराशिषु तमः किंचित्कथं संभवेत् ॥१०॥

धन्यो भवान्वितनुते वसतिं प्रशान्तां पावित्र्यमूर्तिसरितस्तटरम्यदेशे ॥
एतादृशानि भगवन्कुरुते यदेवं काव्यानि कर्णमधुराणि सुधासमानि ॥११॥

✦ ✦ ✦

अद्यैव कृष्णातटपूर्निवासे[1] दिनानि नीत्वा कतिचिन्निवृत्तः ॥
अहं लभे चारुतमं यथैतज्जाने तथा क्षेत्रनिवासलाभम् ॥१२॥
श्रीकृष्णातटिनी नितान्तरमणी तीरस्थतृड्ढारिणी
विस्तीर्णा बहुधान्यशाकजननी सोपानिनी ह्लादिनी
शुद्धान्ता रसवाहिनी बहुसरिन्नीरस्य निष्यन्दिनी
दृष्टा कस्य भवेन्न मानसहरा भावत्कवाणीव भोः ॥१३॥
यस्यामिदानीं नरवाहिनौकास्तीरं विहायैकमयन्ति पारम् ॥
तासां कृतिं तामवलोक्य मन्ये किं स्याद्भवोप्येवमसौ सुतीर्यः ॥१४॥
ग्रीष्मेऽत्र भीष्मतरणिस्तपति क्वचिच्च वृष्टिं क्वचिज्जलपतिस्तनुते च सृष्टौ ॥
इत्थं समानबलिनावधुना समीक्ष्य पश्यामि नो विजयते कतरोऽग्रतेजाः १५
भवत्प्रणामं सुविनीतचित्तं समर्पयामि स्म विशेषहृष्टः ॥
श्रीपांडुरंगाय सदाशिवाय सरस्वतीहारमिव प्रभाते ॥१६॥
भवत्पत्रादराचित्तं मम संगमलालसम् ॥
भवन्तं भगवन्प्रेक्षे कदा द्रागमलालसम् ॥ १७ ॥
यमकश्लेषचित्राणि भवद्विश्लेषदुःखितः ॥
हसिताशेषपत्राणि कदा द्रक्ष्याम्यशेषतः ॥ १८ ॥
एवमेव भवता निजपत्रच्छत्रपात्रविषयोऽहमवेक्ष्यः ॥
रक्षणीय उपदेशकथाभिः प्रार्थयैवमहमत्रभवन्तम् ॥ १९ ॥
श्रीवेदगङ्गाजलपानचित्तो न पारये पातुमहं यदम्भः ॥
तद्वर्णनं पाययसि प्रभो चेन्मां कामयेऽन्यन्न वितृप्तकामः ॥२०॥

✦ ✦ ✦

श्रीगौरीशो धृतशशिकलो भस्मलिप्तांग ईशो
नेत्रज्वालाज्वलितमदनो भक्तदुःखापहारी ॥
स्थाणुः शर्वः सकलमकरोत्पूर्णमत्यल्पबुद्धेः
पत्रं यस्य द्विजवर भवान्वेत्तु तं रामचंद्रम् ॥ २१ ॥

---

1 सांगली.

## ४ अनुवेदगङ्गम् ।

[ हें पत्र माझे स्वर्गवासी स्नेही वे. शा. सं. महादेवशास्त्री कात्रे हे वाई प्राज्ञपाठशाळेंत शिकत असतां त्यांस शेळोली ( शैलाली ) हून लिहिलें. यापैकीं श्लोक २ ते १९ हा भाग 'अनुवेदगङ्गम्' या नांवानें 'राजारामियन्' १९१७ सप्टेंबरच्यां अंकांत आलेला आहे. ]

स्वस्त्यस्तु ते शैशवमित्र साधो पवित्रकार्याहितबुद्धितेजः ।
सुस्थोऽहमेतत्प्रहिणोमि पत्रं शैलालितः क्षेमनिवेदनाय ॥ १ ॥

❖ ❖ ❖

नित्यं प्रभाते लघुमुक्तशय्यः कूजद्विहंगाहितचित्तमोदः ॥
सूर्यांशुभिः प्राप्तहिमव्यपायः सिस्नासुरेतां सरितं सरामि ॥ २ ॥
पश्याम्यहं तत्र च वेदगंगां मन्दप्रवाहां बत हेमवर्णाम् ॥
स्वल्पोर्मिसुव्यंजितहासशोभां श्यामप्रभाश्मावलिवेणिभूषाम् ॥ ३ ॥
यस्यां क्वचिन्मीनवरा नितान्तस्फुरद्वपूंषि क्षणमात्रमेव ॥
प्रकाशयन्तो दधते स्वरूपं सौदामिनीनां जलदस्थितानाम् ॥ ४ ॥
आम्राश्च यस्यास्तटभूमिवृद्धा वासंतिकं पल्लवमादधानाः ॥
भृंगाकुलानां नवमञ्जरीणां सुवासदानेन भवन्ति धन्याः ॥ ५ ॥
दूरस्थितः पश्चिमतो निनादो जलौघजातो मधुरश्च यस्याः ॥
मनोहरो राव इव स्फुटोऽयं विभाति नूनं कटिमेखलानाम् ॥ ६ ॥
रोधोगता पल्लविता च यस्या जम्बूतरोः पंक्तिरियं सुवर्णा ॥
गुञ्जन्मिलिन्दश्रवणीयशब्दा प्रोच्चै रुता सत्कवितेव भाति ॥ ७ ॥
श्वेता इमे यत्तटवासिनश्च बकाः स्वभक्ष्याप्तिविचारमग्नाः ॥
बद्धालयः स्नातविभूतिलिप्तं सन्ध्यापरं मां नु विडम्बयन्ति ॥ ८ ॥
छाया सुनीला पतिता च यस्यां दूरस्थितानां लघुपर्वतानाम् ॥
हैमाय सा कामपि भां ददाति जलाय भोगासननीलविष्णोः ॥ ९ ॥
तां वेदगंगां विमलां विशुद्धां भागीरथीं मूर्तिमतीं विगाहे ॥
अंगेषु यद्गाहनमेव दिव्यमतीव तेजो मम संदधाति ॥ १० ॥
सायं समाप्ताह्निककर्मजातो ग्रामाददूरस्थगिरिं प्रहृष्टः ॥
गच्छाम्यहं स्वच्छजलोत्सकच्छं सद्वल्लरीरूढरसालवृक्षम् ॥ ११ ॥

तथोन्नतस्थानशिलैकदेशं सव्येतराङ्काहितवामजानुः ॥
अस्ताचलप्रस्थितभानुकान्तिं दिदृक्षुरासे विकचाक्षियुग्मः ॥ १२ ॥
तत्रस्थितोऽहं च विलोकयामि ग्रामं मदीयं गिरिवर्तुलान्तम् ॥
यो वेदगंगाजलसन्निकर्षादाधारचूताङ्कुरवद्विभाति ॥ १३ ॥
क्वचित्क्वचिद्वृक्षचयानुमेयान्दूरस्थितानप्युपकण्ठमेतान् ॥
ग्रामान्विलोक्यालियुतं जलस्थं नीलारविन्दस्तबकं स्मरामि ॥ १४ ॥
सन्ध्यारुणायां भुवि विस्तृतास्ते स्तोकप्रदेशा हरितेक्षुयुक्ताः ॥
ननु स्थितैः पुष्पितकिंशुकेषु शुकैस्तुलामाशु समाप्नुवन्ति ॥ १५ ॥
स्नेहस्नुतस्तन्य इमाश्च गावो वत्सप्रिया उद्धृतपुच्छमूलाः ॥
धावन्ति गेहं द्रुतमालपद्भिर्गीतानि गोपैर्निकटानुयाताः ॥ १६ ॥
प्राज्यं कुराज्यं सहसा विहाय गच्छामि किं विश्रमहेतुरस्तम् ॥
अत्रैव किंवा सततं वसेयमितीव भास्वान्सुतरां विरक्तः ॥ १७ ॥
निम्नप्रदेशा विगतांशुभावास्तथाप्यसौ भूधरदुर्गसानुः ॥
प्रकाशवानेव चिरं स्थितोऽस्ति यथोच्चता स्यादधिका तथा श्रीः ॥१८॥
तत्स्थानवासे सह काङ्क्षया मे सहस्ररश्मिर्जलधौ निमग्नः ॥
स्वं स्वं गृहं गच्छति सर्वसत्त्वे नत्वेश्वरं ग्रामवरं निवर्ते ॥ १९ ॥

❖ ❖ ❖

तव मे पूर्वदृष्टस्य याताः काश्चित्समाः सुहृद् ॥
पत्रव्याजेन पश्यामि त्वामहं दूरसंस्थितः ॥ २० ॥
अतस्त्वां प्रार्थये मित्र त्वन्निरामयवाचकम् ॥
वदद्भ्यासवृद्धिं च पत्रं मां प्रेषयाश्विति ॥ २१ ॥
सर्वत्र प्रसृता कीर्तिर्यस्य चंद्रिकया समा ॥
वन्दनीयगुरुं तं ते दण्डवत्प्रणमाम्यहम्[1] ॥ २२ ॥
श्रीखंडेकुलजन्मानं श्रीचिन्तामणिनंदनम् ॥
रामचंद्रं सखायं ते मां विद्धि प्रियदर्शन ॥ २३ ॥

इति शम् ।

---

१ गुरुवर्य विद्वद्रत्न वे. शा. सं. नारायणशास्त्री मराठे यांस उद्देशून हें वंदन केलें आहे.

## ५ श्रीशंकरस्ते वितनोतु मंगलम् ॥

( प्रस्तुत पत्र एका स्नेह्यास त्याचे विवाहप्रसंगीं लिहिलें आहे. )

श्रीः  करवीरतः ( ता. ६-१-१९१८ )

मार्गशीर्ष वद्य ९ शके १८३९

स्वस्त्यस्तु ते मांगलिकाय धीमते गार्हस्थ्यसोपानसमारुरुक्षवे ॥
सुहृद्वरेण्याय विलोचनेन्दवे श्रीकंठभक्ताय सुशीलशालिने ॥ १ ॥
धन्यो भवान्यत्खलु बिल्वपुर्यां[1] पवित्रभूम्यां कुरुषे विवाहम् ॥
भवप्रियं स्थानमिदं शुभंयु कुर्याच्छुभं हीति मुदं वहामि ॥ २ ॥
चान्द्रीं कलामुच्छिरसा दधाति यो गौरीं तथाङ्केन विशाललोचनाम् ॥
हेरम्बलीला ललिता विलोकयञ्छ्रीशंकरस्ते वितनोतु मंगलम् ॥ ३ ॥

❖ ❖ ❖

दृष्ट्वा मोदं वहति सकलो वृद्धनारीसमूहो
बालाः किंवा युवयुवतयो लोकितुं याः समुत्काः ॥
या वा हेतुर्नववरवधूकौतुकस्यापि तास्ते
रम्याः काश्चिल्ललितमधुराः सूचयिष्यामि लीलाः ॥ ४ ॥

अथो वधूस्ते सहिता सखीजनैरादिश्यमानाभरणैर्विभूषिता ॥
निर्बध्यमाना चलहस्तकंकणा स्मेरानना दास्यति ते हि वीटिकाम् ॥५॥
कलं तदोच्चारितनाथनाम्नी मुखस्थितां छेत्स्यति दद्भिरेनाम् ॥
छिनत्ति किं पद्मबिसं मराली सशिञ्जितेतीह नु मंस्यसे त्वम् ॥ ६ ॥
तत्स्पर्श ईषत्कृतरोमहर्षो गन्धो मुखोद्भः सुरभिर्विशेषः ॥
ध्वनिश्च माधुर्यमयो भवन्तं नूनं करिष्यन्ति सुखाम्बुमग्नम् ॥ ७ ॥
एतानि चान्यानि सुखानि मित्र किं तैरनेकैर्लिखितैर्मयात्र ॥
शंके पुनस्तेष्वतिमात्रमग्नः स्मरिष्यसि त्वं सुहृदं न वेति ॥ ८ ॥



---

१ बेळगांव.

## ६ बालानसूया तनुते विनोदम् ।

( हें पत्र माझे वडील बंधू ती. श्री. शं. आ. हुजुरबाजार व ती. कै. डॉ. शं. चिं. श्रीखंडे यांस ते शेळोलीस ( शैलाली ) गेले असतां मला मुंबईसच रहावें लागल्यानें तेथून मी लिहिलें. शांता व अनसूया ( श्लोक ३।४ ) या बालिका भाच्या होत. )

भोः पूज्यप्रियबंधू ! श्रीः मुंबापुर्याः ता. ३०-१२-१९१९

वनोद्देशैर्जम्बूबकुलकुलजम्बालललितै-
दधानां संशोभां जनजनितलोभां हृतहृदम् ॥
गताभ्यां शैलालीं विपुलतरशालीं निरुपमां
भवद्भ्यां बंधुभ्यामतनुविभवाभ्यामथ नमः ॥ १ ॥
तां जग्मिषुः शैलवतीं तनुं मे यद्यग्रजः स्थापितवानिहैव ॥
मनस्तु मे सार्धमनेन यातं रोद्धुं समर्थो नच हन्त जातः २ ॥
पश्यामि तेन मनसा ननु चक्षुषैव
तास्ता मनोहरतमा युवयोः क्रिया याः ॥
शांतादिकामृदुलमञ्जुलकोकिलानां
संभाषणेषु रचितादरयोः प्रियेषु ॥ ३ ॥
वृद्धायती क्वापि गृहीतयष्टिर्बालानसूया तनुते विनोदम् ॥
विप्रायते शुभ्रामयं वसाना वस्त्रं क्वचित्क्रीडनपत्रहस्ता ॥ ४ ॥
आदिष्टमात्रा गुरुभिः कुमारी नारायण[1]स्त्वं भव चारुबाले ॥
इति स्वयं धीरगभीरवक्त्रा जनं समन्तात्कुरुते सहर्षम् ॥ ५ ॥
दोलानिषण्णा मधुरस्वरेण बाला यदा गायति सा भवन्तौ ॥
तदा बहिः कोकिलकूजितानि मुदावहानि प्रसरन्ति कानि ॥ ६ ॥
तंत्रीस्वरं स्मारयता स्वनेन गायन्ति कन्या यदि बंधुवर्यान् ॥
अन्ये जना गानविलोभ्यमाना 'मामा'त्वकामा मनसा भवन्ति ॥ ७ ॥

❖ ❖ ❖

कन्यकां च ननु कांचनवर्णां सिंजतीमलघु कांश्चन वर्णान् ॥
कान्तयाङ्कनिहितां सविलासं स्वीकरोतु किमु केशवरायः ॥ ८ ॥

❖ ❖ ❖

नमः सर्वात्मना मातापितृभ्यां सततं नमः ॥
द्विरेफायति चित्तं हि यत्पदाब्जरजस्सु मे ॥ ९ ॥

---

१ एक गंभीर चेहऱ्याची व्यक्ति.

## ७ शतधाऽदीर्यत तस्य चेतसा ।

श्रीः करवीरतः (ता. २२-७-१९१७)

स्वस्त्यस्तु शास्त्रिप्रवराय[१] धीमन् मत्पत्रिकादर्शितहर्षसीमन्
विद्याप्रकर्षेण गुरूपमाय द्विजर्षये भागवतोत्तमाय ॥ १ ॥
अज्ञानतामिस्त्रविनाशकाय परोपकारार्थधृतात्मकाय
विद्वन्नभोमंडलभूषणाय सुश्राव्यगोष्ठ्यात्मकभाषणाय ॥ २ ॥
सलीलमेतां सलिलप्रवाहां यो वीतदोषां कवितां करोति
सदा सदाचारपराय तस्मै भूयांसि मे सन्तु नमांसि भूयः ॥ ३ ॥

❖ ❖ ❖

रामचंद्रकरदर्शनेन या कोशिनी कुमुदिनी व्यकाशत
तद्भवा रसवती मनोहरा पत्रिकामधुकरी जगौ मधु ॥ ४ ॥
पीयूषसारविपुलां भवतो यथेयं प्राक्पत्रिकामनुगता मम याति दृष्टिम्
मन्ये तथाहमतिसुंदरताप्रवर्णां संध्यामिमामनुगता ननु चंद्रिकैषा ॥५॥

❖ ❖ ❖

मम पूज्यपितुः सहोदरः[२] पितृकल्पो बहुमानपूजितः
जितषाड्रिपुरीशभक्तिमान्हरिकैवल्यपदं जगाम भोः ॥ ६ ॥
अथ तस्य सुतो निजाङ्घ्रयोः पितृशीर्षे व्यलपन्निधाय सः ॥
श्रवणे पतितं च यस्य तच्छतधादीर्यत तस्य चेतसा ॥ ७ ॥
मम तात विहाय मां कथं गमने बुद्धिरहो त्वया कृता
ममता मयि ते क्व निर्गता तव सोढास्मि कथं वियोजितम् ॥ ८ ॥
इयमत्रभवत्प्रियासखी भवदीयेन करेण लालिता ।
अवलोक्य भवन्तमीदृशं मुषिता ग्रन्थततिर्विदूयते ॥ ९ ॥
अमृतानुभवं निपीय ते चिरमत्रैव सुखात्मिका गतिः ॥
अमृतानुभवं निषेवितुं वद जाता भगवन्कथं मतिः ॥ १० ॥

---

१ वे. शा. सं. भागवतशास्त्री यांस. २ कै. ती. पांडुरंग शंकर श्रीखंडे. हे भगवद्भक्त व वेदान्ती होते. ज्ञानेश्वरीवर 'बालबोधिनी' नामक सुलभ अर्थाची टीका हे लिहीत असतां सन १९१७ त वयाचे ६२ वे वर्षी यांस देवाज्ञा झाली.

बत यासि कुतोऽम्बुजेक्षण प्रियताताकृतपूर्णपुस्तकः ॥
रचितेयमवेहि वर्तते शशिरेखेव नु 'बालबोधिनी' ॥ ११ ॥
अयि चातुरि चारुलेखनि मम तातेन चिरं करे धृते ॥
क्व गता तव सा द्रुता गतिः क्व च मोहान्धनिषूदनं बलम् ॥१२॥
मधुरैर्मननीयभाषणैः कृतवान्यः सकलाञ्शुचिस्मितान् ॥
नयनाम्बुभिराननं भृशं भवतस्तस्य करोमि चाविलम् ॥ १३ ॥
करुणं विललाप संस्मरन्पितृवस्तूनि च तानि तानि सः ॥
अभवञ्छ्रवणेन यस्य ते सकलाः शोकपरिप्लुता नराः ॥ १४ ॥

---

## ८ नितान्तदुःखः सुहृदां वियोगः ।

श्रीः करवीरतः ( १९१७ आगस्ट. )

भगिनि व्यवहारकौशले त्वां शिरसाहं प्रणमामि रामचंद्रः ॥
अलभे न निरामयं वदन्तीं तव रम्यामिह पत्रिकां निकाम्याम् ॥१॥
मत्पूर्वपत्रे लिखिता हि वार्ता शोकाम्बुमग्नामकरोन्नु त्वाम् ॥
यतोऽधुना मौनवती स्थितासि नितान्तदुःखः सुहृदां वियोगः ॥२॥

तथापि बुद्ध्वाऽस्थिरतां परिस्थिते-
ध्रुवं च नाशं सकलस्य वस्तुनः ॥
त्वमर्हसि स्थापयितुं निजां शुच-
मिदं नरायत्तविशेषसाधनम् ॥ ३ ॥

हास्यकान्तवदनं तव कान्तं सन्तमस्मि विनतः शमवन्तम् ॥
आचारन्तमनिशं च नितान्तसत्कृतिं प्रथितशंकररायम् ॥ ४ ॥

गीर्वाणभाषाऽस्ति विषादहन्त्री
हर्षाम्बुवर्षात्कृतशोककर्षा ॥
तस्यां भवत्तं बहुमोदहेतु-
रिति प्रयत्नं कृतवानमुष्मिन् ॥ ५ ॥

इति शम् ।

---

## ९ पुण्यासु भूधरविभागवनस्थलीषु[१] ।

श्रीः मुंबापुर्याः (ता. १३-९-१९)

हे विश्वनाथ ! सुहृदां हृदयप्रमोद लब्धं मयाद्‌भुततमं भवदीयपत्रम् ॥
प्रावृट्छ्रियं समुपवर्णयता त्वयात्र रम्या वसंततिलकाश्चतुरेण सृष्टाः ॥ १ ॥

✦ ✦ ✦

'हे मातः !' 'पुत्र किं रे !' 'बदरफलनिभास्तातहस्ते विभान्ति'
'बाल ! प्रेष्ठ ! क नूनं ?' 'जननि ! सुरुचयः पत्रके रम्यमुक्ताः' ।
'कार्यन्तामाशु हाराः प्रिय ! करकमले भूरिमुक्ताफलानि'
'नो नो पद्माक्षि ! मुक्ताः परमिह निपुणे ! विश्वनाथाक्षराणि'[२] ॥२॥

✦ ✦ ✦

असौ[३] मन्दैर्वातैः सजलकणशीतैः श्रमहरै-
स्तटस्थानां चेतो रमणरमणीनां सुखयति ॥
दधानो यः सायं नयनरमणीयं वपुरिदं
निधिः सोऽयं वारां प्रकृतिमविकारां नु कुरुते ॥ ३ ॥

तीरे समुद्रस्य तुषारवायुं सायंतनं सेवितुमागतानाम् ॥
शृंगारितानां चलकुंडलानां किं वर्ण्यते भा गजगामिनीनाम् ॥ ४ ॥
सौवर्णवर्णाधिकगौररंगा शिरीषपुष्पाधिकपेलवांगी ॥
भीता समुद्रोर्मिघनध्वनिभ्यो बाला करं मुंचति नैव पत्युः ॥ ५ ॥
कांचित्क्षणं पद्मदलायताक्षीं विलासिनीं सस्पृहमीक्षमाणम् ॥
विलोक्य कान्तं सुमकोमलास्य हस्तं सचित्तं रमणी चकर्ष ॥ ६ ॥
नितान्तरक्तं रविबिम्बमब्धौ दिनान्तकारं च निमज्जमानम् ॥
अनंगदाहेप्सितकान्तसंगा कुतूहलात्पश्यति कंजनेत्रा ॥ ७ ॥
मुक्तानिबद्धा जलजाननानां पीनेषु शृंगारिषु चोन्नतेषु ॥
लुठन्ति हाराः स्तनमण्डलेषु यथा गिरेः सानुषु शारदाब्दाः ॥ ८ ॥

✦ ✦ ✦

---

१ प्रस्तुतपैकीं ९, १०, ११ व १२ हीं पत्रें वे. शा. सं. विश्वनाथ शंकर दात्ये यांस लिहिलीं आहेत. भूधर=भुदरगड.

२ हस्ताक्षराचें सौष्ठव वर्णन करणारा एक संवाद.

३ मुंबईच्या चौपाटीवरील दृश्य.

क्वचिच्छ्राव्यं गानं क्वचिदपरिमाणं च रुदनं
क्वचिद्रम्यालापाः क्वचिदशुभपापाश्च कलहाः ॥
क्वचिच्छोभादीपाः क्वचिदरवितापास्तरुगणाः
परित्यज्यैतान्मे निरतमभिरामे त्वयि मनः ॥ ९ ॥
रम्याणि यत्र युवकोकिलकूजितानि
काम्यानि कुत्र च विशालशिलातलानि ॥
वृक्षैर्लताभिरभिभूधरमाकुलानि
द्रक्ष्यामि तानि विततानि कदा वनानि ॥ १० ॥
स्वच्छानि शारदशशिप्रभशीतलानि
स्वेच्छाविहारपरगोपकुमारकाणि ॥
गंभीरनीरसुभगश्रुतिनिम्नगाया[1]-
स्तानि त्वया सह जलानि कदावगाहे ॥ ११ ॥
मंदं जुषञ्शिशिरगन्धवहं सगन्धं
कुन्दादिसुन्दरसुमानि विलोकमानः ॥
स्वच्छन्दमेमि च कदा नु भवत्सहायः
पुण्यासु भूधरविभागवनस्थलीषु ॥ १२ ॥
छायाप्रधानवनराजिषु भूधरस्य
पुष्पैः फलैश्च रुचिरासु चिरं विहर्तुम् ॥
स्नातुं जलेषु विमलेषु च वेदनद्याः
कांक्षत्ययं तव सखा ननु रामचंद्रः ॥ १३ ॥

---

## १० मनो हि शैलालिसमुत्सुकं मे[2] ।

॥ श्रीः ॥ मुंबापुर्याः (ता. २६-१२-२१)

विश्वनाथ सुहृद्राज स्वस्ति ते कविकोकिल ॥
विहारिणे यथाकामं शैलालीशैलराजिषु ॥ १ ॥
त्वदीयपत्राख्यसरोरुहेण फुल्लेन पीयूषरसायनेन ॥
माधुर्यभाजां च धुरि स्थितेन रम्येण कश्चिन्मुमुदे द्विरेफः ॥ २ ॥

---

१ वेदगंगा. २ शैलाली=शेळोली गांव.

आल्हादिनीशैलसरित्कथाभिर्न नूतनाभिस्तु मनोरमाभिः ॥
सद्यः कृतं कोकिलवर्णकाभिर्मनो हि शैलालिसमुत्सुकं मे ॥ ३ ॥
शिला विशाला गिरयः सुनीला लताः सपुष्पाः सफला रसालाः ॥
गावः सुपुष्टा विहगाश्च तुष्टाः कर्षंति नूनं रसिकस्य चित्तम् ॥ ४ ॥
स्वच्छानि तोयानि ससारसानि वनानि दीर्घाणि सकोकिलानि ॥
संमोहनानि प्रमदेक्षितानि स्तुवन्ति केचिद्रसिका युवानः ॥ ५ ॥
शशांकदीप्तं गगनं निशायां प्रफुल्लपुष्पाणि लतागृहाणि ॥
गूढानि तानि प्रियसंगतानि प्रमोदयन्ते कतिचिन्मनांसि ॥ ६ ॥
स्थानानि शीतानि समावृतानि पद्मानि नीलभ्रमरीरुतानि ॥
निलीनहंसानि सरोवराणि चेतांसि यूनां समदानि कुर्युः ॥ ७ ॥
कामं न सर्वाणि भवन्ति तत्र तथापि शैलालिसमुत्सुकोऽहम् ॥
एकाकिनी यद्यपि वेदगंगा श्रियं नदी कामपि सा बिभर्ति ॥ ८ ॥
गायञ्छ्रियं तां मधुकूजितेन रम्येषु तस्या विहरंस्तटेषु ॥
ध्यायन्सखे चात्मनि विश्वनाथं शरच्छतं जीव लभस्व शर्म ॥ ९ ॥

---

## ११ –प्रसरति हि ते कापि सुषमा ।

॥ श्रीः ॥ फलटणपत्तनतः

प्रियसुहृद् ! (ता. ११-७-२२)

स्वस्ति ते हृदयकोमलमित्र ! वर्धयेत्तव सुखं गणराजः ॥
तत्पदे स्वकवितालिमपूर्वामर्पयस्व हरितामिव दूर्वाम् ॥ १ ॥
शैलालिशालीनमनोज्ञवृत्तं गीतं त्वया यन्नु वियोगिनीषु ॥
न केवलं रंजयति स्म चित्तं दुःखं चकारापि वियोगजन्यम् ॥ २ ॥

धन्योऽसि मित्र ! खलु ते सफलं च जन्म
यत्तेऽस्ति सा सहचरी प्रियवेदगंगा ॥
यस्याः सखे प्रतिदिनं नयनाभिरामा
स्वाभाविकीयमभिवर्धत एव शोभा ॥ ३ ॥

कदा तस्यास्तीरे विमलतमनीरे श्रमहरे
हरिज्जंबूहारे जलवनविहारे सुरुचिरे ॥

बलिष्ठानां श्रेष्ठ ! त्वमसि शरणं वायुतनय !
जपन्नेवं भाग्याद्दिनमपि नयेयं क्षणमिव ॥ ४ ॥
क्षेत्राणि सस्यैर्हरिभिर्विभान्ति
सरांसि पद्मैः कमलानि भृंगैः ॥
वनानि पुष्पैः सुफलैश्च यत्र
सा तेऽस्तु शैलालिरियं चिरौकः ॥ ५ ॥
खगानां मेघानां वसति ! गगनोत्तुंगशिखरे !
फलैः पुष्पैः पूर्णे सुविमलपयोनिर्झररमयि ! ॥
अये दिग्देवीनां नगरि ! रमणीये प्रियतमे
विशाले शैलालि ! प्रसरति हि ते कापि सुषमा ॥ ६ ॥
आरोपिता भूमिपु कौशलेन प्राणप्रियाः कोमलपल्लवाश्च ॥
कच्चित्सखे ते बलभीमवृक्षा[1] भवंति नु प्रत्यहमेधमानाः ॥ ७ ॥
प्रावृट्पयोदेपु नदत्सु सायं स्फुरत्प्रकाशासु च चंचलासु ॥
धीरे समीरे वहति प्रभूतं गिरौ सहर्षं रमसे नु कच्चित् ॥ ८ ॥
रक्ता सलीला सरसांतरंगा सुश्राव्यनादा सकलासु रम्या ॥
तरंगिणी संप्रति वेदगंगा प्रीणाति किं वागिव सत्कवीनाम् ॥ ९ ॥

❁ ❁ ❁

आम्रा न संति रुचिरा इह[2] नैव शैलाः
स्रोतोवहापि न दधाति जलाल्पबिंदुम् ॥
प्रावृड्घनोऽपि न च वर्षति वारिधाराम्
कस्मात्सुहृन्मधुरकोकिल ! कूजसि त्वम् ॥ १० ॥
नृत्यंति नृत्यनिपुणा न च बर्हिणोऽत्र
नालोच्यते किमपि रम्यधनुर्मघोनः ॥
न श्रूयते स्तनितमंबुधरेण गीतं
चित्रं खगाः श्रुतिमनोहरमालपन्ति ॥ ११ ॥
नूनं न संति विमलानि सरोवराणि
वार्तापि नास्ति मकरन्दसरोरुहाणाम् ॥
एते तथापि किल पुष्पितवल्लरीपु
गुंजंति मंजुलतरं भ्रमराः प्रमत्ताः ॥ १२ ॥

---

१ श्रीमारुतिस्थानाजवळचे वृक्ष. २ फलटण येथें.

स्वभाव एवैष मुदंतराणां ते संततं हर्षधना भवन्ति ॥
यत्कोकिलाः षट्चरणा विहंगाः कूजंति गुंजन्ति कलं रुवन्ति ॥ १३ ॥
निशायामुदेति प्रसन्नो हिमांशुर्मनःपद्मिनीनां विकासं तनोति ॥
अयं स्तूयते कामियुग्मैः प्रकामं तथा दुष्यतेऽपि प्रियाविप्रयुक्तैः ॥१४॥
निंदन्तु केचिद्यदि वा स्तुवन्तु क्षिणोतु बिंबं यदि वर्धतां वा ॥
इंदुः खगोलं क्रमते कलावान्धीरः स्वमार्गं न कदा जहाति ॥ १५ ॥
नायं शशी नैव रविः कविर्न न मंगलो नापि घटप्रसूतिः ॥
न कोऽपि तेषु स्थिरतां प्रपेदे शतेषु कश्चिल्लभते ध्रुवत्वम् ॥ १६ ॥

❖ ❖ ❖

प्रभातकाले गृहकृत्यमग्ना गायन्ति काश्चिल्ललनाः सुगीतम् ॥
स्वरेण तासां किल पंचमेन प्रबोधिता कूजति कोकिलापि ॥ १७ ॥
निशम्य गानं युवकोकिलानां संभूयते चेतसि पंचबाणः ॥
पुष्पेषुविद्धाः प्रमदा अमन्दं प्रियेषु रोषं कृतकं त्यजन्ति ॥ १८ ॥

❖ ❖ ❖

एवंविधा वीक्ष्य निसर्गशोभास्संजायते कोऽपि महान्प्रमोदः ॥
तद्वर्धनं प्रेममयं तथापि स्मरामि नूनं तव साहचर्यम् ॥ १९ ॥

इति शम् ।

## १२ मनोहरं पद्ममिव प्रफुल्लम् ।

श्रीः करवीरतः ( १९२८ इ.)

स्वस्ति ते गुणवते प्रियबंधो मस्तके भवतु ते शिवहस्तः
यत्प्रसादमभिकांक्षति लोकः सर्वदा स कुशलं तव कुर्यात् ॥ १ ॥
पत्रं त्वदीयं बहुमोदकारि लब्धं मया मंजुलशब्दयुक्तम् ॥
रसेन पूर्णं सुलभप्रसादं मनोहरं पद्ममिव प्रफुल्लम् ॥ २ ॥

श्लोकाः सुवृत्तरचना रमणीकुचाभा
अर्थस्तथा सुमधुरस्त्वधरेण तुल्यः ॥
श्लेषादयः किमपि मंजुलनूपुरास्ते
तैस्संयुता युवतिवत्कविता विभाति ॥ ३ ॥

मनोज्ञानां वाचां मृदुलमधुराणां जनयिता
सुरम्यश्लोकानां श्रवणरुचिराणां रचयिता ॥

विशुद्धग्रंथानां भुवनविदितानां द्युतिमतां
जनेऽस्मिन्निर्माता कथमपि हि दैवेन भवति ॥ ४ ॥
अस्मिंल्लोके प्राणिनां देहभाजां विद्युल्लेखाचंचला जीवनौका ॥
धन्या धन्याः सज्जनाः सत्क्रियास्ते कीर्तिर्येषामक्षयो नित्यकायः ॥५॥

✤ ✤ ✤

कदा बाणादीनां कृतिषु रचनायामपि कदा
कदाचित्संगीते नयनरुचिरे प्रेक्षणविधौ ॥
कदार्तानां सम्यग्बहुविधचिकित्सादिकरणे
कदा ध्याने शंभोर्मम मतिमहं सुष्ठु रमये ॥ ६ ॥
अस्यां नगर्यां रसिकाग्रणीनां मनोविनोदाय तडागशोभा ॥
प्रफुल्लपंकेरुहपंक्तिमेनां मुखानि मन्ये जलदेवतानाम् ॥ ७ ॥
असंख्यकल्लोलविलोलवारि सुनिर्मलं वीक्ष्य सरोवरस्य ॥
अनेकदृष्टान्तविचारपूर्णं कवीशकाव्यं खलु संस्मरामि ॥ ८ ॥
सायंतनं शीतलरम्यवायुं निषेवितुं यांति विलोलनार्यः ॥
तासां मुखस्पर्धनतत्पराणि कासारपद्मानि समुल्लसंति ॥ ९ ॥
दिशि दिशि नगरांते संति रम्ये सरांसि
सरसि सरसि हृद्या अंबुजानां समूहाः ॥
मधुरमलिकुलानां गुंजनं तेषु तेषु
कथमिव न मनोभूर्गुंजनेनोत्थितः स्यात् ॥ १० ॥

✤ ✤ ✤

धृत्वा दंतैरपि सुनिशितैर्नैव तान्पीडयंतीं
गेहाद्गेहं मृदुलशिशुकान् रक्षणार्थं नयंतीम् ॥
मार्जारीं तां निजतनुभवान्पोषयन्तीं च वीक्ष्य
मन्ये मातुर्हृदयमकरोदद्वितीयं विधाता ॥ ११ ॥

✤ ✤ ✤

क्वचित्स्खलन्ती क्वचिदस्खलन्ती क्वचित्प्रवीणा क्वचिदप्रवीणा ॥
क्वचित्स्मिताढ्या क्वचिदस्मिताढ्या गत्युक्तिनाट्येषु मनोज्ञबाला[1] ॥१२

---

1 एका लहान बालिकेचें वर्णन.

क्वचित्स्कन्धे मातुः क्वचिदपि च यो मातुलभुजे
क्वचिद्द्रोष्ठे क्रीडन्क्वचिदपि मुदा नर्तनपरः ॥
क्वचिद्द्रोष्ठीं कुर्वन्कलमधुरमस्पष्टवचसा
कुमारो गाङ्गेयो[1] रमयति मनोऽयं स्मितमुखः ॥ १३ ॥

❖ ❖ ❖

त्वद्वर्णितां सुंदरशैलपंक्तिं नितांतरम्यां जलपूर्णवेदाम् ॥
द्रष्टुं तथा तां मम जन्मभूमिं सोत्कंठमास्ते हृदयं मदीयम् ॥ १४ ॥
कूजन्ति यस्यां मधुरं विहंगा लतासु गुंजंति कलं द्विरेफाः ॥
नदंति रम्याः सरितः प्रवाहास्तां शैलराजिं मनसा व्रजामि ॥१५॥
मातापितृभ्यां भवतो नमो भावपुरस्सरम् ॥
ताभ्यां सुचिन्त्यमानानां वर्धन्तां दिवसा हि नः ॥ १६ ॥
माता गीता श्रीपतेः स्नेहपूर्णा वेदः श्रीमान्मार्गदर्शी पिता च ॥
भार्या भक्तिः शंकरे सुष्ठु येषां बोधः सूनुस्ते महान्तो जयन्ति ॥१७॥
सुविमलहृदयाब्जां मातरं प्रेमपूर्णां
स्वशिशुहृदयदीपं स्नेहतो वर्धयन्तीम् ॥
सविनयमभिवंदे जानकीं मामकीनां
किमिव हि तनयानां दैवतं मातुरन्यत ॥ १८ ॥
भव्यं कुर्याद्भूधरस्ते विशालो रक्षन्तु त्वां वेदगङ्गाजलानि ॥
शैलालिश्रीर्वर्धयन्मङ्गलानि त्वां सङ्गीतं कोकिलाः श्रावयन्तु ॥१९॥

इति शम् ।



## १३ स्फुट-श्लोकाः

श्रीशंकर ! तव वदने सुखसदने प्रेक्ष्य तां मनोरमताम् ॥
त्वद्वदनांबुजभक्तौ सततं गौरीश ! मन्मनो रमताम् ॥ १ ॥
यद्भक्तियुक्तोऽस्ति नरस्समर्थः संसारदुःखोदधिपारमेतुम् ॥
परं तु यत्पादभवे जलौघे गाङ्गे निमग्नोऽस्ति नमोऽस्तु तस्मै ॥ २ ॥

---

१ भगिनी चि. सौ. गंगुताईचा मुलगा.

केचिच्छंकर! भीतियुक्तमनसो नागाधिपालोकनात्
फूत्कारश्रवणान्महाद्युतिमतो नेत्राच्च ये बिभ्यति ॥
तान्मन्ये बहुदुर्भगान्कलुषितप्रक्षिप्तचित्तानहो
धन्योऽहं शशिशेखराननवरात्पश्यामि नान्यत्सुधीः ॥ ३ ॥

अञ्जनाय विषयान्धजनानां भञ्जनाय सहसा भवरज्ज्वाः ॥
आञ्जनाय जविने रघुराजरञ्जनाय गदिनेऽस्तु नमो मे ॥ ४ ॥

यस्यांकस्थसती यदेकनयनं यच्छीर्षमन्दाकिनी
यद्वक्त्रं रुचिरस्मितैर्विलसितं भक्तानुकम्पाकरम् ॥
यत्कण्ठश्च विराजते भवतु स क्षेमाय नः शंकरो
रम्भावद्रुचिराशिवद्रजतवद्राकेशवद्रामवत् ॥ ५ ॥

भोगः शय्या हस्तभूषोत पादो भार्याङ्कस्थो यस्य वाङ्कस्थभार्या ॥
गङ्गा पादे मौलिभाग्वाथ यस्य कुर्यात्कृष्णः कृष्णकण्ठः स वा शम् ॥६

आनन्दकलानिधये ज्ञानभानवेऽब्धयेऽनुकम्पायाः ॥
त्रैलोक्यकल्पतरवे सद्गुरवे संततं नमस्कुर्वे ॥ ७ ॥

गौरीवक्त्रारविंदं सततविकसितं दर्शनाच्छीतरश्म्यो-
र्गङ्गासंयुक्तमौलेर्वदनसितरुचेर्भालबालेन्दुतश्च ॥
हेरम्बानन्दसिन्धुः स्फुरति ननु पितुः सन्निधेर्यस्य पूर्णः
कुर्यात्सोऽयं महेशः कुशलमतितरामस्मदीयं दयालुः ॥ ८ ॥

जटाजूटं मौलौ शशिविमलहास्य सुवदने
महारुद्राक्षाणामुरसि शुभमालाश्च रुचिराः ॥
स्वरूपं बिभ्राणो हरिहरविधीनां जयति यः
स दत्तात्रेयो मे हरतु भवतापत्रयमिह ॥ ९ ॥

परिघोपमदोर्दण्डं शैलसन्निभगण्डिनम् ॥
प्रचण्डशुण्डं हेरम्बं वन्दे ब्रह्माण्डमण्डनम् ॥ १० ॥

कैलासतुङ्गशिखरे गिरिकन्यकायै
यो दर्शयन्नयनसुंदरसृष्टिशोभाम् ॥
देव्या शिरीषसुमपेलवया सहर्ष-
मालिङ्गितोऽवतु सदा हि सदाशिवो नः ॥ ११॥

शरदिन्दुकलाधवला पारिजसुमकोमला कमलवदना ॥
माधवमनोविनोदा कमला पतिदैवता जयति ॥ १२ ॥

नत्वा गौरीशपादाब्जं मन्मनोभ्रमरप्रियम् ॥
अग्रजं भ्रमरं वंदे मन्मनोऽब्जनिवासिनम् ॥१३॥

विघ्नान्निवारयतु विघ्नपतिर्गणेशो
वाचं करोतु विमलां च सरस्वती नः ॥
श्रीशंकरो दिशतु नित्यनिरामयत्वम्
भक्तिं परां निजपदस्य ददातु कृष्णः ॥१४॥

अंके यस्य विभाति श्रीर्वाचि देवी सरस्वती ॥
ज्ञानदानसमर्थं तं वन्देऽहं पार्थसारथिम् ॥ १५ ॥

मंगलं दिशतां शश्वत्सर्वतो नो गुरुप्रियौ ॥
सांदीपनिमुनेः शिष्यौ बलरामत्रिविक्रमौ ॥ १६ ॥

सतोयतोयदश्यामं विपङ्कपङ्कजाननम् ॥
अनाथो मैथिलीनाथं भजनीयं भजाम्यहम् ॥ १७ ॥

नमोऽस्तु मे प्रांजलिनः सदैव व्याहारकासारविहारिदेव्यै ॥
अनन्तरं सत्कविभूषणेभ्यः श्रीव्यासवाल्मीकिमुनीश्वरेभ्यः ॥ १८ ॥

(१९)

कल्याणं मे सदा कुर्याच्छारदा वाग्विशारदा ॥
यस्याः प्रासादात्सुलभं स्वर्गीयममृतं भुवि ॥ १ ॥
प्रसन्ना शारदा यस्य तस्य कीर्तिर्धनं सुखम् ॥
नूनमेतान्यपत्यानि शारदामातृसन्निधौ ॥ २ ॥
एषा प्रकीर्तिता देवैर्ऋषिभिर्यक्षकिन्नरैः ॥
अस्याः प्रसादाद्दीनोऽपि भजते कामपि श्रियम् ॥ ३ ॥
कवयः शुकवाल्मीकिव्यासादय इमां प्रति ॥
स्तुवन्तस्तां समर्चन्तो गायन्ति स्म सदुक्तिभिः ॥ ४ ॥
वाणीं तां प्रथमं वंदे हे देवि ! वरदा भव ॥
मनसा सततं नौमि त्वदीयं पदपङ्कजम् ॥ ५ ॥

❀ ❀ ❀

करोति सर्वदः सर्वान्सफलान्सन्मनोरथान् ॥
शंकरं तं नमस्कुर्वे जगत्कल्याणकारिणम् ॥ २० ॥
आशीर्वाचस्तथ्यगर्भा गुरूणां शं वर्षेयुर्मूर्तयो मंगलानाम् ॥
गीर्गंभीरा दीप्तिगर्भा घनानां काले दद्यादेव वृष्टिं जलानाम् ॥ २१ ॥
राजीवनयनं रामं सीतालक्ष्मणसंयुतम् ॥
पंचवट्यां वसन्तं तं वन्देऽहं भक्तिपूर्वकम् ॥ २२ ॥

॥ इति बदरिकाफलमुष्टिः ॥

प्रणतधीशबरीश्रमसंचिता बदरिकाफलमुष्टिरियं मम ॥
भजतु भक्तिसमर्पितवाङ्मयी रसिकराघवसेवनधन्यताम् ॥

## कविः-श्रीयुत विश्वनाथशास्त्री शंकर कात्रे

### १ वर्षासमयवर्णनम्

पयोधरैः खं सरितो जलैर्नवैः पल्वैर्जलं बालतृणैश्च भूमयः ॥
लतासमूहैश्च चिता महीधरा मुदा दिदृक्षोश्च कयापि मानसम् ॥ १ ॥
व्याप्तं घनं कज्जलनीलवारिदैः प्रपूरितं यद्यपि शीतशीकरैः ॥
तथापि नार्द्रं न च वा कलंकितं सुनिर्मलं सन्मुनिचित्तवन्नभः ॥ २ ॥
भृशं नदद्भिर्जलभारमन्थरैर्बलाहकैर्नव्यतमालमेचकैः ॥
गृहांगणे मत्तगजैर्यथा नृपः क्रीडत्यसौ खे बलवान्प्रभंजनः ॥ ३ ॥
न साम्प्रतं क्वापि मिलिंदगुंजितं न श्रूयते कोकिलकूजितं क्वचित् ॥
न चापि भव्यास्तरवः सुपुष्पिता न कुत्र कुन्देन्दुविनिर्मलं पयः ॥ ४ ॥
अशैवला नैव शिला महीधरे वितस्तिमात्रापि न भूरपंकिला ॥
अदुर्गमः सम्प्रति नैव पर्वतो न चाप्यनार्द्रं वसुधातलं क्वचित् ॥ ५ ॥
स्फुटस्य वार्ता कमलस्य नैव चेत्कुतस्स दामोदसुवासितानिलाः ॥
न वा लताः सम्प्रति पुष्पशोभनास्तथापि रम्या खलु वार्षिकी छविः ॥६॥
तरंगमालाकुलितान्तरंगया विशालया रक्तसरोजरंगया ।
सपापया सम्प्रति वेदगंगया भयंकरं स्वं प्रकटीकृतं वपुः ॥७॥

श्रुतिरम्यरवा नगोदराद् द्रुतमेते प्रवहन्ति निर्झराः ॥
जलसेकगतातपव्यथा जलदं गायति किं नगावलिः ॥ ८ ॥
निशि मेघचयैस्तिरोहिते भगणे रात्रिवधूविभूषणे ॥
विचकासति पुच्छदीप्तयो गगने ज्ञानलवोद्धता इव ॥ ९ ॥
घनमर्दलताल्पद्धतौ स्फुटसंदर्शितमेचकावलि ॥
प्लुतशब्दविशेषसुन्दरं विपिने नृत्यति बर्हिणां गणः ॥ १० ॥
नदीषु पूर्णासु जलैर्मृदाविलैः पतन्ति यद्यान्ति जवात्तटद्रुमाः ॥
विदन्ति ते किं नु परार्थजीविता असारसंसारपरंपरामिमाम् ॥ ११ ॥
वर्षासु मेघैरभिषिक्तशृंगाः समिद्धदावाश्च सदा निदाघे ॥
समा महीध्राः सुखदुःखयोगे जडाः किमेते किमु तत्त्वविज्ञाः ॥ १२ ॥
इन्दो ! चिरं मेघतिरोहितोऽसि चेत्त्वां राहुणा भक्षितमप्ययं जनः ॥
मन्ता घनाच्छादितमेव साम्प्रतं यत्सूक्ष्मदृष्टिर्विरलः क्षितौ पुमान् ॥ १३ ॥
भो भोः प्लवाः पंकविलिप्तगात्रा यूयं सुखं गर्जत तावदेव ॥
यावत्प्रतप्ताखिलभूविभागः समागतो न प्रखरो निदाघः ॥ १४ ॥
यदा निदाघः प्रखराग्नितुल्यो युक्तं तदा चातक ! याचकत्वम् ॥
मेघेषु सिंचत्सु भृशं धरित्रीं दीनानि कस्मात्कुरुषे वचांसि ॥ १५ ॥
लब्धं न पाद्मं मधु भृंग ! सांप्रतं तथापि लिप्सां कुटजेषु मा कृथाः ॥
द्वित्रानृतून्यापय फुल्लपंकजस्तावत्समभ्येति मनोहरो मधुः ॥ १६ ॥
भृंगोऽपि पद्मामृतबिन्दुभोक्ता संत्यज्य गुंजारवमद्य मूकः ॥
प्राप्ते पिकास्मिन् विपरीतकाले मूकत्वमंगीकृतमेव साधु ॥ १७ ॥
अनिलविधुतमेघैः पातिताः पर्वतेष्वप्यतितरलघवोऽम्भोबिन्दवस्तुंगशृंगात् ॥
सरितमनिकटस्थां संघशो यान्ति वेगादपि बलरहितानां संहतिः कार्यकर्त्री ॥ १८
अंभोधरच्छन्ननभोऽध्वना रविः कष्टेन गच्छत्यथवा सुखेन किम् ॥
न ज्ञायते तत्परमाशु धावतीत्यहो प्रभूणां नियमव्यवस्थितिः ॥ १९ ॥
मेघैरदृष्टा ध्रुवमध्यकीलका बद्धेव दाम्ना मुनिपंक्तिरम्बरे ॥
परिभ्रमत्येव पथा तथाप्यसावहो प्रभूणां नियमव्यवस्थितिः ॥ २० ॥



## २ ॥ अभिनन्दनम् ॥

[ पुढील श्लोक कु. कृष्णाताई हुजुरबाजार यांस १९३० च्या मॅट्रिक परीक्षेंत अकबरनवीस संस्कृत स्कॉलर्शिप् मिळाल्या प्रसंगीं अभिनंदनार्थ लिहिले आहेत. ]

श्रीः शैलाली ( ता. १०-६-३० )

आदरेण समुपासिता चिरं या त्वया भगवती सरस्वती ॥
ज्ञानवृद्धिमतुलां करोतु ते दीर्घमायुरथ निर्मलं यशः ॥१॥

सुशीलया त्वया बाले ! समुत्तीर्णपरीक्षया ॥
द्रष्टुरद्याथवा श्रोतुः कस्य नानन्दितं मनः ॥२॥

त्वया स्त्रियापि प्रथमे प्रयत्ने सदक्षिणं लब्धमिदं यशोऽद्य ॥
कृतप्रयत्नान् बहुवारमाकुलान् विडंबयत्येव नरान्वृथाश्रमान् ॥३॥

त्वां सर्वविषयोत्तीर्णामभिनन्दन्तु केऽपि ते ॥
अहं तु संस्कृतोत्तीर्णां विशेषमभिनन्दये ॥४॥

बालयापि महन्नूनं स्थिरनिश्चयया जगत् ॥
त्वयेदं यशसा चित्रं कृष्णया पांडुरीकृतम् ॥५॥

सुशीलभूषां समधीतविद्यां विनीतवृत्तिं गृहकर्मदक्षाम् ॥
त्वां वीक्ष्य को वा जनिता न वांछेत्कन्यापितृत्वं स्पृहणीयमीदृक् ॥६॥

तीर्त्वा सुदुस्तराण्येवं सोपानानि यथाक्रमम् ।
मंदिरं श्रीसरस्वत्या भास्वद्विश यशस्विनि ! ॥७॥

दीर्घमायुश्चिरं सौख्यं सौभाग्यं सुविनीतताम् ॥
वितनोतु सुशीलत्वं श्रीयुता शारदा त्वयि ॥८॥

इति शम् ।

— विश्वनाथशर्मा



## * श्रीविष्णुशास्त्रिस्मृतिः ।



नमोऽस्तु विष्णो! भवते बुधाय स्वदेशसेवाकृतनिश्चयाय ॥
येन त्वया मोहतमिस्रनाशी प्रज्वालितो लोकहृदि प्रदीपः ॥१॥

देशे यदाऽभून्नितरां निराशा स्वधर्मसंस्कारबलागमेषु ॥
तदा तवोत्साहधृतिप्रगल्भा वाक्केवलाऽभूदमृतप्रभावा ॥२॥

जनेषु रौक्ष्यं निदधे पदं यत् स्वीयाभिमानं सकलं निरस्य ॥
पीयूषवाग्वृष्टिभिरत्र जाता त्वन्निर्मिता नंदनवृक्षराजिः ॥३॥

तेजस्विनां सत्कृतिकारणाय न खल्ववश्यं बहुदीर्घमायुः ॥
ज्ञानेश्वराचार्यवरौ तु पूर्वौ त्वमेव विद्वन्नु तयोस्तृतीयः ॥४॥

क्व ते वयस्ते क्व गिरां प्रभावः क्व ते वयस्ते क्व 'निबंधमाला' ॥
क्व ते वयस्ते क्व मतिर्विशाला क्व ते वयस्ते क्व च राष्ट्रभक्तिः! ॥५

गुणाः परेषामपि धारणीया दोषाः स्वकीयाः परिवर्जनीयाः ॥
इति त्वया 'जॉन्सन'वर्णनेन दत्तं जनेभ्यः सुविचाररत्नम् ॥६॥

श्रीशारदानंदवहं मयूरं दुर्निन्दितानां दववह्नितप्तम् ॥
वाग्वृष्टिभिर्मोचयता त्वयाऽत्र का राष्ट्रभाषोपकृतिः कृता न ।७॥

त्वत्पादसंभूतविशेषसंस्थाः कुर्वन्ति लोकोद्धरणं तथेमाः ॥
यथा पवित्रा विमला विशुद्धाः श्रीविष्णुपादोद्भववारिवीच्यः ॥८॥

रा. चिं. श्रीखंडे

* ही कविता लोकशिक्षण १९३२ मार्च-एप्रिल अंकांत आली आहे. याशिवाय वाङ्मय-श्री-खण्डांतील कांहीं लिखाणास मनोरंजन, यशवंत, आनंद, महाराष्ट्र-साहित्य, ज्ञानप्रकाश, न्यू स्कूल त्रैमासिक, बालिकादर्श, राजारामियन्, वासंती वगैरे नियतकालिकांत व पुस्तकांत स्थान दिल्याबद्दल त्या त्या संपादकांचे आम्ही मनःपूर्वक आभार मानितों.

—रा. चिं. श्री.

# शुद्धिपत्र

[ नजरचुकीमुळें किंवा अनभ्यस्ततेमुळें झालेले कांहीं महत्त्वाचे असे मुद्रणदोष व व्याकरणदोष या शुद्धिपत्रांत सुधारले आहेत. वाचकांनीं, यांत दर्शविल्याप्रमाणें प्रत शुद्ध करून घेण्याची कृपा करावी. ]

| पृ. | ओळ | अशुद्ध | शुद्ध |
|---|---|---|---|
| | | **प्रास्ताविक वगैरे** | |
| (१८) | १० | कविजन: | कविजनो |
| (४०) | खालून १३ | मन:स्वास्थ | मन·स्वास्थ्य |
| (४२) | २ | वैय्याकरण | वैयाकरण |
| (४५) | खालून ८ | मन:स्वास्थ | मन:स्वास्थ्य |
| | | **गद्यविभाग** | |
| ८ | १५ | लक्ष्मुमीबाई | लक्ष्मुंबाई |
| २१ | खालून ३ | श्रेयस्कार | श्रेयस्कर |
| २७ | १५ | गार्गेयी, वाचक्नवी | गार्गीवाचक्नवी |
| ३१ | पठेण्यांस 'सुख' सदराखालीं ३ आंकडा पडला आहे तेथें १ पाहिजे. | | |
| ३८ | ६ | विषेस | विशेष |
| ४३ | टीप २ | मार्च मध्यें | एप्रिलमध्यें |
| ५१ | ४ | कोठेंहि | पाणी कोठेंहि |
| ५३ | खालून ३ | गार्गेयी व वाचक्नवी या | गार्गीवाचक्नवीसारख्या |
| ८६ | ,, ७ | किं जातहार्दैन च विद्विषादर: । | न जातहार्दैन न विद्विषादर: । |
| | | **पद्यविभाग (प्राकृत)** | |
| १६ | खालून २ | पगंत | पंगत |
| २२ | श्लोक ८ | विकासितानन | विकासितानन |
| २७ | कडवें २ | रवि दोर करीं होउनी | रविदोर करीं देउनी |
| ३० | आर्या १२ | जो | तो |
| ,, | ,, ,, | जनसुकता | जनकसुता |
| ५२ | कडवें ४ | करीं | करी |
| ६२ | ओळ ५ | सोडुनि | सोडुनि |
| ६५ | श्लोक १३ | शिकवी | शिकवि |
| ७७ | ओळ ५ | वाजत वाजत | वाजत गाजत |

## पद्यविभाग (संस्कृत)

| पृ. | ओळ | अशुद्ध | शुद्ध |
|---|---|---|---|
| ९७ | १४ | छित्त्वेषा | छित्त्वैषा |
| १०० | श्लोक ४ | तंपद: | संपद: |
| १०१ | ,, ११ | पीनावुरस्थौ | पीनावुरस्स्थौ |
| १०२ | ओळ १ | पीड्य पीनकुचौ | विनिपीड्य कुचौ |
| १०४ | श्लोक १० | प्रणाम: स्मिताननं शंकररायममस्तु । | नमामि स्मिताननं शंकररायमासम् । |
| १०४ | ,, ४ | त्वत्कनीय इषुधी: | त्वत्कनीयइषुधी: |
| १०६ | ,, ७ | शंपाघातैर्घोरर्घोषे | शंपाघातैर्घोरघोषे |
| ११२ | ,, १९ | प्रार्थयैवमहमत्रभवन्तम् । | प्रार्थयेऽहमिदमत्रभवन्तम । |
| ११३ | ,, ७ | प्रोच्चै | प्रोच्चै |
| ११६ | ,, ८ | सिंजती | मुंचती |
| ,, | ,, ८ | स्वीकरोतु | स्वीकरोति |
| ११८ | ,, ४ | आचारन्त | आचरन्त |
| १२० | ,, १२ | जुष० | स्पृश० |
| १२७ | ,, १९-१ | प्रासादात् | प्रसादात |
| १२८ | खालून २ ओळ | रक्तससरोज० | रक्तसरोज० |

## टीपा

१ प. वि. पृ. ९८ पासूनचीं तीन संस्कृत पत्रें लिहिण्याचे वेळीं कवि कै. डॉ. शं. चिं. श्रीखंडे हे मुंबईस 'परेळ लॅबोरेटरी' (हल्लींची हॅफ्‌कीन इन्स्टिट्यूट) मध्यें जंतुशास्त्र (Bacteriology) शिकण्यासाठीं २ महिने होते.

२ प. वि. पृ. १०६ 'अलीकजंदरीया' हा 'अलेक्झांड्रिया'साठीं कवीनें बनविलेला नूतन प्रतिशब्द. 'मत्स्यास्त्र' (श्लो. १०) = पाणबुडीनौकेनें मारलेली टॉर्पेडो.

३ प. वि. पृ. ११७ (श्लोक ४) 'कोशिनी कुमुदिनी' असें पत्रिकेभोंवतीं असलेल्या पाकिटास उद्देशून ह्मटलें आहे. पत्रिका ह्मणजे जणुं काय कुमुदिनींतून बाहेर पडलेली भृंगीच !

४ प. वि. पृ. १२०, कविता १०, श्लोक २ यांत 'द्विरेफ:' शब्दाचा अर्थ 'रामचंद्र:' असा सूचित केला आहे. कारण त्यांतहि 'भ्रमरा'प्रमाणें दोन रेफ ह्मणजे 'र'कार आहेत.